# संस्कृत-वार्ताः

दिनाङ्कः 30-12-2020

प्रातः - 06: 55

**मुख्य-वार्ताः**

- प्रधानमन्त्रिणा मोदिना समर्पित-वस्तु-वीथीकान्तर्गतं पूर्वभागीयः न्यू भाउपुर-न्यू खुर्जा खण्डः समुद्घाटितः। प्रोक्तं सर्वोत्तम-विकास-गुणवन्ता प्रदानाय राजनीक दलेषु भवेत् प्रतिस्पर्धा।
- प्रशासनं कृषक-संघरनानि चान्तरा अद्य षष्ठम स्तरीया वार्ता अपहृणे द्विवादने दिल्लीस्थ विज्ञान भवने समायोक्ष्यते। चत्वादिंशत् संख्याकानि कृषक संघटनानि भागं गृहृणान्ति।
- राष्ट्रपतिः रामनाथ कोविन्दोऽद्य ऐषमो डिजिटल इण्डिया पुरस्कारान् प्रदास्यते।
- कोविड-19 क्रमे सफलतां अधिगच्छति राष्ट्र वारंवारम् स्वास्थमिति नव द्वे दशमलवोन्तर पञ्चनवति प्रतिशतम्।
- ऑस्ट्रेलिया भारतं चान्तरा संक्रीड्यमाणा द्वितीया अहोरात्रे व्यापिनी निकषस्स्पर्धा भारतेन अष्ट क्रीडकारनां सुरक्षापूर्वकं विजिता। दलनायको अजिंक्या रहाणे इत्यसौ क्रीडापुरूषः चितः।

**कोविड ओपनिंग**

कोरोना इति वॉश्विकसङ्क्रमणं विरुद्धं राष्ट्रभावनया युध्यते। भवन्तोऽपि कोरोणासङ्क्रमणं अवसानं गच्छेत् तदर्थम् अस्मभिः साकं सुरक्षाया: उपायत्रयं यथावस्थमेव सन्धारयेयुः। कुशाग्रबुद्धिपरिचायकपरं मुखनासिकाच्छादकं सामाजिकदौर्यानुपालनं पाणिपादप्रक्षालनं च सर्वदैव अवधारयन्तु यतोहि यावन्न औषधं तावन्न शैथिल्यम्।

**प्रधानमंत्री- इंफ्रास्ट्रेक्चर**

प्रधानमंत्री नरेन्द्रमोदी उत्तरप्रदेश वस्तूनां परिवहनसौविध्याय विनिर्मितस्य समर्पित वस्तुवीधिकाया: पूर्वभागीयं नूतन भाउपुर-नूतनखुर्जाखण्डं हय: दृश्य श्रव्य इति अन्तर्जालीय माध्यमेन राष्ट्राय समार्पयत्। पञ्चाशत् अधिक सप्तशतोत्तर पञ्चसहस्ररूप्पकमूल्यै: विनिर्मितस्य अस्य रेलयानमार्गस्य अत्यधिक भाग: उत्तरप्रदेशे वर्तते अत: साम्प्रतं कानपुर-दिल्ली मुख्य मार्गे यात्रीयानानि निर्बाधगत्या जवीयेन च प्रचलिष्यन्ति इति आकल्यते। प्रधानमन्त्रिणा मोदिना अवसरेऽस्मिन् प्रत्यापदि यत्-वाथीरियं आत्मभारतं इत्यस्य माध्यमरूपेण भविता। अपि च अस्मिन् क्षेत्रे नूतन-वृत्यवसराश्च प्रारप्स्यन्ते।

असौ राष्ट्रविकासाय सम्पर्क सुविधां समाश्रित्य प्रावोचन् इयं वीथिका स्वतन्त्र-भारतस्य महत्त्वपूर्ण परियोजना-सु प्रतिपादिता। तेन सबलं प्रोदितं आधारभूत संरचना कश्यचिद् राष्ट्रस्य शक्ति: भवति। भारतं जवीयागत्या आर्थिक

महाशक्तिरूपेण वैश्विकपटले आविर्भवति। राजनीतिक दलेषु सर्वोत्तम-सुविधा-प्रदानाय प्रतिस्पर्धा स्यात् इत्यापि प्रतिपादितं प्रधानमन्त्रिणा श्रीनरेन्द्रमोदिना। अवसरेऽस्मिन् उत्तरप्रदेशीयो मुख्यमन्त्री आदित्यनाथ: योगी अपि उपस्थित: आसीत्।

**किसान-बातचीत**

अभिनवं कृषिविधिं समाप्रित्य केन्द्र प्रशासनेन पत्रमाध्यमेन कृषका: चर्चायै समाहूता:। इयं हि षष्ठमस्तरीया वार्ता वर्तते कृषकान्-प्रशासनं चान्तरा। अवधेयं तथ्य मिदं यत् केन्द्र प्रशासन चत्वारिंशत् संख्याका: प्रतिनिधय: अद्य अपराह्णे द्विवादने दिल्लीस्थ विज्ञानभवने चर्चायै समाहूता:। अद्य समनुष्ठीयमाणे समुपवेशने कृषि सम्बद्धानि त्रीणि विधेयकान्ति, नूनतम समर्थन मूल्ये क्रयणव्यवस्था राष्ट्रिय राजधानीक्षेत्रं तन्निकटवतिक्षेत्रेषु वायो: गुणवन्ता प्रबन्धनाय अध्यादेश: ऐषमो विद्युत् संशोधन विधेयकम् चेति विषया: मुख्यास्पदं भजन्ते।

**कोविड-19**

कोविड-19 इति वैश्विकसंक्रमणं विरूध्य प्रशासनस्य पूर्वस्वीकृता: पदक्षेपा: कोविड-19 संक्रमण प्रतिरोधी वीराणां प्रयासाश्च फलीभूता: जाजायन्ते। देशे कोविड-19 स्वास्थ्यलाभ: प्रतिशतं नव द्वे दशमलवोत्तर पञ्चनवतिमित: सवृत्त:। अधुना अष्टनवति-लक्षाधिका: जना: स्वास्थ्य-लाभं अवाप्य सकुशलं गृहं उपेता:। विगते

अहोरात्रे षोऽश सहस्रत:  किञ्चद् अधिकानि नूतन प्रकरणानि पञ्जीकृतानि अपरत: द्विपञ्चाशदधिक-द्विशतं रोगिण: कालकवलिता: सूच्यन्ते इति।

**क्रिकेट**

ऑस्ट्रेलिया-भारतं चान्तरा संकीड्यमाणाया: चतसृणां क्रिकेट निकष-स्पर्धामालिकाया: द्वितीया अहोरात्र व्यापिनी क्रीणा भारतेन ह्य: अष्ट क्रीडकानां सुरक्षापूर्वकं विजिता। अधुना उभे दले निकषस्पर्धा-याम् अस्यां एकेन-एकेन अंकेन समत्वं भजेते। द्वितीये पर्याये विजयार्थं सप्तति धावनाङ्कानां लक्ष्यं भारतेन मयंक-अग्रवाल-चेतेश्वर पुजार चेति क्रीडकद्वयस्य हानिपुरस्सरं आसीत् समधिगतम्। भारतीय: दलनायक: अजिंक्या रहाणे धावनाङ्कानां शतकं अधिगन्तुं क्रीडापुरूषत्वेन सभाजित:।

**।। इति वार्ताः ।।**